ॐ

# रुद्रमन्त्रसहित-चमकानुवाकाः

पं० विश्वनाथ एन्ड सन्स फोटूग्राफर

इत्येतैः

स्वकीय "कश्मीर प्रताप स्टीम प्रेस" नाम्नि

यन्त्रालये

पं० गोविन्दभट्ट हुंडू द्वारा संशोधयित्वा प्रकाशिताः॥

द्वितीयं संस्करणम्

शाकाब्दाः १८५० वैक्रमाब्दाः १९८५



मूल्यं ६ आना

ओ ३ म्

अथ

# ॥ रुद्रमन्त्रसहित-चमकानुवाकाः ॥

ॐ नमो भगवते महारुद्राय ॥

ॐ देवं सुधाकलशसोमकरं त्रिनेत्रं पद्मासनं च वरदाभयदं सुशुभ्रम् । शङ्खाभयाब्जवरभूषितया च देव्या वामेऽङ्कितं शमनभङ्गहरं नमामि ॥

शुम्भुं शूलपिनाकसोमकलशभ्राजिष्णुहस्ताम्बुजं देव्यालंकृतवामपार्श्वमुरगाधीशस्फुरत्कङ्कणम् । गङ्गागर्जितगर्भजूटममलं चन्द्रार्धमौलिं प्रभुं कीनाशक्लेशनाशनिश्चितधियं भस्माङ्गरागं भजे ॥

यस्मात्सर्वमिदं प्रपञ्चरचितमादौ जगज्जायते
यस्मिंस्तिष्ठति लीयते च समये जायेत कल्पं पुनः ।
यं ध्यात्वा मुनयो प्रपञ्चरहितं विन्दन्ति मोक्षं ध्रुवं
तं वन्दे पुरुषोत्तमाख्यमखिलं नित्यं विभुं निष्कलम् ॥

शुद्धस्फटिकसङ्काशं त्रिनेत्रं पञ्चवक्त्रकम् । गङ्गाधरं दशभुजं सर्वाभरणभूषितम् ॥ नीलग्रीवं शशाङ्काङ्कं नागयज्ञोपवीतिनम् । व्याघ्रचर्मोत्तरीयं च वरेण्यमभयप्रदम् ॥ कमण्डल्वक्षसूत्राभ्यामन्वितं शूलपाणिक[1]म् । ज्वलन्तं पिङ्गलजटाशिख[2]मुद्द्योतकारिणम् ॥ अमृतेनाप्लुतं हृष्टमुमादेहार्धधारिणम् । दिव्यसिंहासनासीनं दिव्यभोगसमन्वितम् ॥ दिग्देवतासमायुक्तं सुरासुरनमस्कृतम् । नित्यं च शाश्वतं शुद्धं ध्रुवमक्षरमव्ययम् ॥ सर्वव्यापिनमीशानं रुद्रं वै विश्वरूपिणम् । एवं ध्यात्वा द्विजः सम्यक् ततो यजनमारभेत् ॥ मृत्युञ्जय महादेव पाहि मां शरणागतम् । जन्ममृत्युजरारोगैः पीडितं भवबन्धनैः ॥ इति विज्ञाप्य देवेशं जपेन्मन्त्रं च त्र्यम्बकम् ॥ त्र्यम्बकं यजामहे सुगन्धिं पु[3]ष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥

१ नम् २ खा ३ रयिपोषणम् (शत्रुनाशनम्)

आ त्वा वहन्तु हरयः सचेतसः श्वेतैर[1]श्वैरिह केतुम-
द्भिर्वाताजवेन बलमद्भिर्मनोजवायातु शीघ्रं मम
रुद्राय हव्यन्देवानां च ऋषीणां चासुराणां च पूर्व-
जं सहस्राक्षं विरूपाक्षं विश्वरूपं महादेवं शिव-
मावाहयाम्यहम् । आवाहयाम्यहं देवमीश्वरं पार्व-
तीपतिम् ॥ वृषभासनमारूढं नागाभरणभूषितम् ।
प्रीयतां यजमानस्य तुष्टो भूयाज्जगत्पतिः । शुक्लव-
र्णो महातेजाः शुक्लस्रग्दामभूषितः । बलिः पुष्पं
चरुश्चैव धूपोऽयं प्रतिगृह्यताम् ॥

(पाठकाले) ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ३ ॥

(होमकाले) षडाहुतयः

ॐ तत्पुरुषाय विद्महे १ ॥

ॐ महादेवाय धीमहि २ ॥

ॐ तन्नो रुद्रः प्रचोदयात् ३ ॥

ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि ४ ॥

ॐ तन्नो रुद्रः प्रचोदयात् ५ ॥

---

१ श्वेतैरश्वैःसह

ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि ।
तन्नो रुद्रः प्रचोदयात् ६ ॥

शतरुद्रियन्देवानां रुद्रशमनं भवाय शर्वायश्च प्रत्युत्क्रान्तानुवाको देवर्षी रुद्रदैवत्यः त्रिष्टुप्छन्दश्चयने विनियोगः ॥ नमस्ते देवा रौद्रमानुष्टुभमाद्या गायत्री पञ्चमषष्ठ्यौ पङ्क्त्यन्त्या महापङ्क्तिर्मा भैरेकपदा जगत्यनुष्टुप्त्रिष्टुब्महावृहती यवमध्या रुद्रो देवता चरमेष्टिका अस्य रुद्रस्य प्रश्नस्य अनुष्टुप्छन्दः अघोरऋषिः सङ्कर्षणमूर्तिः सुरूपो योऽसावादित्यः परः पुरुषः स एव[1] देवता अग्निक्रतुचरमायामिष्टिकायां शतरुद्र[2]पाठे (होमे) विनियोगः ॥

सकलस्य रुद्राध्यायस्य श्रीमहारुद्रो देवता एका गायत्री छन्दः तिस्रोऽनुष्टुभः तिस्रः पङ्क्तयः सप्ता-

१ एष रुद्रो २ रुद्रिय

महि ।

शर्वीयश्च
त्रिष्टुप्छन्द-
ानुष्टुभमा-
हापङ्क्ति-
ती यवम-
स्य प्रश्न-
मूर्तिः सुरू-
वता अग्नि-
ामे ) विनि-

देवता एका
कयः सप्ता-



ष्टुभो द्वे जगत्यौ परमेष्ठीऋषिः समस्तपापक्षयार्थे
कलकामनासिद्ध्यर्थे श्रीमहारुद्रदेवतासन्तोषणा-
र्थे चमकानुवाकसहितरुद्रमन्त्रपाठे (होमे) विनि-
योगः ॥

ध्यानम् कर्पूरगौरं करुणावतारं संसारसारं भुजगे-
न्द्रहारम् । सदा रमन्तं हृदयारविन्दे भवं भवानी-
सहितं नमामि ॥

ध्याये नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रस
म् । पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृ
वसानं विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्
त्रिनेत्रम् ॥

आपातालनभस्तलान्तभुवनब्रह्माण्डमाविःस्फुरज् ज्योतिः स्फाटि
लिंगमौलिविलसत्पूर्णेन्दुबिम्बामृतैः । अस्तोकाप्लुतमेकमेकमनिशं रु
नुवाकं जपन् ध्यायन्नीप्सितसिद्धये द्रुतपदं विप्रोऽभिषिञ्चेच्छिवम्

आशुः शिशान इति शुक्रज्योतिष्मानंशुप्रजननं
प्रजाः काश्यप्या इति कश्यपस्य वाजस्य प्रसवोऽ

आशुः शिशानो वृषभो न युध्मो[1] घनाघनः क्षोभणश्चर्षणीनाम् । संक्रन्दनोऽनिमिष एकवीरः शतँ सेना अजयत्साकमिन्द्रः ॥ संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना । तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥ स इषुहस्तैः स निषङ्गिभिर्वशी सँस्रष्टा स युध इन्द्रो गणेन । सँसृष्टजित्सोमपा बाहुशर्ध्यू[2]र्ध्वधन्वा प्रति हिताभिरस्ता ॥ बृहस्पते परि[3]दीया रथेन रक्षोहामित्राँ २ अपबाधमानः । प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥ बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः । अभि वीरो अभि [4]षँत्वा [5]सँहोजा जैत्रमिन्द्ररथमा तिष्ठ गोवित् ॥ गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म[6]ं प्रमृणन्तमोजसा । इमँ सजाता अनु वीरयध्वमिँन्द्रं सखायोऽनु सँ रभध्वम् ॥ अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः । दुश्च्यवनः पृतनाषाडयुध्योऽस्माकँ सेना अवतु प्र युत्सु ॥ इन्द्र आ[8]सां नेता बृहस्पति[9]र्दक्षिणा यज्ञः पुर एतु सोमः ।

१ भीमो २ शर्ध्युग्र ३ धी ४ स ५ सहोजिज्जैत्रायनो रथ ६ ज्मा ७ मिन्द्रसखायमनु संव्ययध्यम् ८ एषां ९ तिर्दक्षिणा

[व]सेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम्[1] ॥
[इ]न्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्द्ध उग्रम् ।
[म]हामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥
अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जय-
न्तु । अस्माकं वीरा उत्तरे भवन्त्वस्माँ[2] २॥ उ देवा अवता
हवेषु ॥

शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माँ-
श्च । सत्यश्चर्तपाश्चात्यँहाः[3] ॥ ईदृङ्ङान्यादृङ्ङ् सदृङ्ङ् प्रतिस-
दृङ्ङ् । मितश्च सम्मितश्च सभराः ॥ ऋतश्च सत्यश्च ध्रुवश्च
धरुणश्च धर्त्ता च विधर्त्ता च विधारय ॥ ऋतजिच्च सत्य-
जिच्च सेनंजिच्च[4] सुषेणश्च अन्तिमित्रश्च दूरे अमित्रश्च गणः ॥
ईदृक्षास एतादृक्षास ऊँ[5] षु णः सदृक्षासः प्रतिसदृक्षास
एतन । मितासश्च सम्मितासो नो अद्य सभरसो मरुतो
यज्ञे अस्मिन् ॥ इन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानो यथेन्द्रं
दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन् । एवमिमं यजमानं
दैवीश्च विशो मानुषीश्चानु वर्त्मानो भवन्तु ॥

॥ ओं नमः शिवाय वरदाय ॥

---

१ यन्तु मध्ये २ स्मानु दे ३ सत्यश्च तपश्च दंहा [सत्यश्च ऋतपाश्चा०] ४ ना ५ ऊ ष णः

ओं नमस्ते रुद्र मन्यवे बाहुभ्यामुत ते नमः । उतो त इषवे नमः ॥ या ते रुद्र शिवा तनूरघो· रापापकाशिनी । तया नस्तन्वा शन्तमया गिरिश- न्ताभि चाकशीहि ॥ यामिषुं गिरिशन्त हस्ते विभर्ष्यस्तवे । शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् ॥ शिवेन वचसा त्वा गिरिशाच्छा वदामसि । यथा नः सर्वमिज्जगदयक्ष्मँ सुमना असत् ॥ अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् । अहींश्च सर्वाञ्जम्भयं[2] सर्वाश्च यातुधान्योऽधराचीः परासुव ॥ असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः । ये चेमे रुद्रा अभितो दिक्षु श्रिताः । सहस्रशोऽवैषां हेळ ईमहे ॥ असौ योऽवसर्पति नीलग्रीवो विलोहितः । उतैनं गोपा अदृशन्नुतैनमुदहार्यः[3] ॥ उतैनं विश्वा भूतानि स दृष्टो मृळयाति नः ॥ नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे । अथो

---

१ नुवा २ यन् ३ यति

ये[1] अस्य सत्वानोऽहं तेभ्योऽकरं नमः ॥ प्र मुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् । याश्च ते हस्त इषवः परा ता भगवो वप विज्यं धनुः कपर्दिनो विशल्यो बाणवानुत ॥ अनेशन्नस्येषव आभुरस्य निषङ्गथि[2] ॥ या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः । तयाऽस्मान्विश्वतस्त्वमय[3]द्मेण परिब्भुज ॥ परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः । अथो य इषुधिस्तवाऽरे अस्मन्निधेहि तम् ॥ नमांसित आयुधायाऽनातताय धृष्णवे । उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ॥ अवतत्य धनुष्ट्वँ[4] सहस्राक्ष शतेषुधे । निशीर्य शल्यानाँ मुखं शिवो नः सुमना भव ॥ यात इषुः शिवतमा शिवं बभूव ते धनुः । शिवा शरव्या या तव तया नो मृळ जीवसे ॥

मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् । मा नो वधीः पितरं मोत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः ॥ मा नस्तोके तनये मा न आयौ

१ य २ धिः ३ यक्ष्मया ४ स्त्वँ

मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ विश्वेश्वर महादेव शिव साशिव सदाशिव त्रिकाल त्रिकालकाल कालाग्निशिख नीलकण्ठ महामृत्युञ्जयभट्टारक नमो नमः ॥

ॐ अग्नाविष्णू सजोषसेमा वर्धन्तु वां गिरः । द्युम्नैर्वाजेभिरागतम् ॥

वाजश्चमे प्रसवश्चमे प्रयतिश्चमे प्रसि[1]तिश्चमे धीतिश्चमे क्रतुश्चमे स्वरश्चमे श्लोकश्चमे श्र[2]वश्चमे श्रुतिश्चमे ज्योतिश्चमे स्व[3]श्चमे ❀ प्राणश्चमेऽपानश्चमे व्यानश्चमेऽसुश्चमे चित्तंचम आधीतंच्चमे वाक्चमे मनश्चमे चक्षुश्चमे श्रोत्रश्चमे दक्षश्चमे बलंचम ❀ ओजश्चमे सहश्चमे आत्माचमे तनूश्चमे शर्मचमे वर्मचमेऽङ्गानिचमेऽस्थीनिचमे परूँषिचमे शरीराणिचम आयुश्चमे जराचमे ॥ १ ॥ यज्ञेन क०

ॐ नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो । नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो । नमः शष्पिञ्जराय त्विषीमते पथीनां पतये नमो । नमो बभ्लु[5]शाय व्याधिनेऽन्नानां पतये नमो ।

---

१ सृ २ श्रा ३ सुवश्च ४ स्था ५ भ्र ❀ संहितायां तारकांक चिह्नितस्थानेष्वितः सर्वत्र "यज्ञेन कल्पताम्" इत्यस्ति ॥

नो रुद्र
विश्वेश्वर
कालकाल
नो नमः ॥
ः । द्युम्नै-
ीतिश्चमे
ज्योति-
ेऽसुश्चमे
मे श्रोत्र-
ात्माचमे
परूँषि-
ज्ञेन क०
पतय
पतये
ां पतये
ां पतय
नमो ।
ान्वितः सर्वत्र



ो हरिकेशायोपवीतिने पुष्टानां पतये नमो ।
ो भवस्य हेत्यै जगतस्पतये नमो । नमो रुद्राया-
ातायिने क्षेत्राणां पतये नमो । नमः सूतायाहन्त्या[२]-
वनानां पतये नमो । नमो रोहिताय स्थपतये
क्षाणां पतये नमो । नमो मन्त्रिणे वाणिजाय
क्षाणां[३] पतये नमो । नमो भुवन्तये वारिवस्कृता-
ोषधीनां पतये नमो । नम आक्रन्दायत उच्चैर्घो-
ाय सत्वानां पतये नमो । नमः कृत्स्नंवीताय[४] धाव-
पत्तीनां पतये नमो ।

ज्यैष्ठ्यञ्चम आधिपत्यञ्चमे मन्युश्चमे भामश्चमेऽमश्च-
ऽम्भश्चमे जेमाचमे महिमाचमे वरिमाचमे प्रथिमाचमे
र्ष्माचमे[५] द्राघ्याचमे[६] वृद्धञ्चमे वृद्धिश्चमे सत्यञ्चमे श्रद्धा-
चमे जगच्चमे धनञ्चमे वशश्चमे त्विषिश्चमे क्रीडाचमे
मोदश्चमे जातंचमे जनिष्यमाणंचमे[७] सूक्तञ्चमे सुकृत-
ञ्चमे ❀ वित्तञ्चमे वेद्यंचमे[८] भूतंचमे भविष्यच्चमे सुगञ्चमे
सुपथ्यञ्चमे[९] ऋद्धञ्चम ऋद्धिश्चमे क्लृप्तञ्चमे क्लृप्तिश्चमे
मतिश्चमे सुमतिश्चमे ॥ १ ॥

१ तां २ त्वा ३ चया ४ त्वं ५ वर्षिमा ६ द्राघिमा (द्राघुया) ७ मानं ८ विद्यं 'विद्या' ९ थं

नमः सहमानाय निव्याधिन आव्याधिनीनां [पत]ये नमो । नमो निषङ्गिणे ककुभाय स्तेनानां [प]तये नमो । नमो वञ्चते परिवञ्चते स्तायूनां पतये [न]मो । नमो निचराय परिचरायारण्यानां पतये नमो । नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमो । नमः सृकायिभ्यो जिघाँसद्भ्यो मुष्णतां पतये [न]मो । नमोऽसिमद्भ्यो नक्तञ्चरद्भ्यः प्रकृन्तानां [पत]ये नमो । नम उष्णीषिणे गिरिचराय कुलुञ्चानां [पत]ये नमः । नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो । नम इषुमद्भ्यो धन्वायिभ्यश्च वो नमो । नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो । नम आयच्छद्भ्योऽस्यद्भ्यश्च वो नमो । नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो । नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो । नमः शयानेभ्य आसीनेभ्यश्च वो नमो । नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो । नमः

सभाभ्यः सभापतिभ्यश्च वो नमो । नमोऽश्वेभ्योऽश्व-
पतिभ्यश्च वो नमः ।

शश्चमे मयश्चमे प्रियश्चमेऽनुकामश्चमे कामश्चमे सौम-
नसश्चमे भगश्चमे द्रविणञ्चमे भद्रञ्चमे श्रेयश्चमे वस्यश्चमे[1]
यशश्चमे ❀ यन्ताचमे धर्ताचमे क्षेमश्चमे धृतिश्चमे विश्वं
चमे महश्चमे संविच्चमे ज्ञात्रश्चमे[2] सूश्चमे प्रसूश्चमे सीरंचमे
लयश्चमे[3] ऋतञ्चमेऽमृतंचमेऽयक्ष्मंचमेऽनामयच्चमे जीवा-
तुश्चमे दीर्घायुत्वञ्चमेऽनमित्रञ्चमेऽभयंचमे सुगञ्चमे[4] शय-
नंचमे सूषाचमे[5] सुदिनंचमे ॥ ३ ॥ यज्ञेन कल्पताम्

नम आव्याधिनीभ्यो विविध्यद्भ्यश्च वो नमो ।
नम उगणाभ्यः तृँहतीभ्यश्च वो नमो । नमो व्राते-
भ्यो व्रातपतिभ्यश्च वो नमो । नमो गणेभ्यो गणप-
तिभ्यश्च वो नमो । नमः कृच्छ्रेभ्यः कृच्छ्रपतिभ्यश्च
वो नमो । नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो ।
नमः सेनाभ्यः सेनानीभ्यश्च[6] वो नमो । नमो रथि-
भ्यो वँरूथिभ्यश्च[7] वो नमो । नमो महद्भ्योऽर्भके-

१ स्य २ त ३ ला ४ ख ५ श्च ६ नि ७ अरथेभ्यश्च

भ्यश्च वो नमो । नमो युवभ्य आशिनेभ्यश्च वो नमो । नमः त्तत्तृभ्यः संग्रहीतृभ्यश्च वो नमो । नमस्तत्तभ्यो रथकारेभ्यश्च वो नमो । नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो । नमः पुञ्जिष्ठेभ्यो निषादेभ्यश्च वो नमो । नमः श्वनिभ्यो मृगयुभ्यश्च वो नमो । नमः श्वभ्यः श्वपतिभ्यश्च वो नमः ।

ऊर्क्चमे सूनृताचमे पयश्चमे रसश्चमे घृतञ्चमे मधुश्चमे सग्धिश्चमे सपीतिश्चमे कृषिश्चमे वृष्टिश्चमे जैत्रञ्चम औद्भिद्यंचमे ❁ रयिश्चमे रायश्चमे पुष्टञ्चमे पुष्टिश्चमे विभुचमे प्रभुचमे पूर्णञ्चमे पूर्णतरंचमे कुयवाश्चमेऽक्षितञ्चमेऽन्नञ्चमेऽक्षुच्चमे ❁ व्रीहयश्चमे यवाश्चमे माषाश्चमे तिलाश्चमे नीवाराश्चमे श्यामाकाश्चमेऽणवश्चमे प्रियङ्गवश्चमे गोधूमाश्चमे मसूराश्चमे मुद्गाश्चमे खल्वाश्चमे ॥ ४ ॥ यज्ञेन कल्पताम्

नमो भवाय च रुद्राय च । नमः शर्वाय च पशुपतये च । नमो नीलग्रीवाय च शितिकण्ठाय च ।

---

१ सि २ गा ३ दं ४ श्च ५ तिश्च ६ म

मो व्युप्तकेशाय च कपर्दिने च । नमः सहस्राक्षा-
च शतधन्वने च । नमो गिरिशाय च शिपिवि-
ाय च । नमो मीढुष्टमाय चेषुमते च । नमो ह्रस्वाय
वामनाय च । नमो बृहते च वर्षीयसे च । नमो
द्धाय च सवृध्वने च । नमोऽग्र्याय च प्रथमाय
। नम आशवे चाजिराय च । नमः शीभ्याय
शीघ्र्याय च । नम ऊर्म्याय चावस्वन्याय च ।
मो नाद्याय च द्वीप्याय च ॥

अश्माचमे मृत्तिकाचमे गिरयश्चमे पर्वताश्चमे सिक-
ाश्चमे वनस्पतयश्चमे हिरण्यञ्चमेऽयश्चमे सीसंचमे
पुचमे श्यामंचमे लोहितायसंचमे * अग्निश्चम आप-
चमे वीरुधश्चम ओषधयश्चमे कृष्टपच्याश्चमेऽकृष्टप-
र्याश्चमे ग्राम्याश्चमे पशव आरण्याश्चमे वित्तंचमे
त्तिश्चमे भूतंचमे भूतिश्चमे * वसुचमे वसुतिश्चमे
र्मचमे शक्तिश्चमेऽर्थश्चम एमश्चम इत्याचमे गति-
चमे ॥ ५ ॥ यज्ञेन कल्पताम्

---

भा २ ग्रा ३ श्च ४ च्यं ५ इ ६ इतिश्च

नमो ज्येष्ठाय च कनिष्ठाय च । नमः पूर्वजाय चापरजाय च । नमो मध्यमाय चाप्रगल्भाय च । नमो बुध्न्याय च जघन्याय च । नमः सोभ्याय च प्रतिसर्याय च । नम आशुषेणाय चाशुरथाय च । नमो बिल्मिने च कवचिने च । नमो वर्मिणे च वरूथिनेच । नमः शूराय चावभेदिने च । नमः श्रुताय च श्रुतसेनाय च । नमो याम्याय च क्षेम्याय च । नम उर्वर्याय च खल्याय च । नमः श्लोक्याय चावसान्याय च । नमः श्रवाय च प्रतिश्रवाय च । नमो वन्याय च कक्ष्याय च ॥

अग्निश्चम इन्द्रश्चमे सोमश्चम इन्द्रश्चमे सविताचम इन्द्रश्चमे सरस्वतीचम इन्द्रश्चमे पूषाचम इन्द्रश्चमे बृहस्पतिश्चम इन्द्रश्चमे ❀ मित्रश्चम इन्द्रश्चमे वरुण· श्चम इन्द्रश्चमे धाताचम इन्द्रश्चमे त्वष्टाचम इन्द्रश्चमे विष्णुश्चम इन्द्रश्चमेऽश्विनौचम इन्द्रश्चमे मरुतश्चम इन्द्रश्चमे विश्वेचमे देवा इन्द्रश्चमे ❀ पृथिवीचम इन्द्र·

---

१ चापगल्भाय [चाप्रगभाय]

श्चमेऽन्तरिक्षं चम इन्द्रश्चमे द्यौश्चम इन्द्रश्चमे समा-
श्चम इन्द्रश्चमे नक्षत्राणिचम इन्द्रश्चमे दिशश्चम
इन्द्रश्चमे ॥ ६ ॥ यज्ञेन कल्पताम्

नमो दुन्दुभ्याय चाहनन्याय च । नमो धृष्णवे
च प्रमृशाय च । नमो निषिङ्गिणे चेषुधिमते च ।
नमः तीक्ष्णेषवे चायुधिने च । नमः स्वायुधाय च
सुधन्वने च । नमः स्रुत्याय च पथ्याय च । नमः
काट्याय च नीप्याय च । नमो नाद्याय च वैशन्ताय
च । नमः कुल्याय च सरस्याय च । नमः कूप्याय
चावट्याय च । नमो वर्ष्याय चावर्ष्याय च । नमो
मेघ्याय च विद्युत्याय च । नमो वीध्र्याय चातप्याय
च । नमो वात्याय च रेष्म्याय च । नमो वास्तव्याय
च वास्तुपाय च ।

अँशुश्चमे रश्मिश्चमेऽदाभ्यश्चमेऽधिपतिश्चम उपाँशु-
श्चमेऽन्तर्यामश्चम ऐन्द्रवायवश्चमे मैत्रावरुणश्चम आ-
श्विनश्चमे प्रतिप्रस्थानश्चमे शुक्रश्चमे मन्थीचमे * आग्र-

१ आग्रायण [आग्रायण]

यणश्चमे क्षुल्लकवैश्वदेवश्चमे ध्रुवश्चमे वैश्वानरश्चम ऋ-तुग्रहाश्चमेऽतिग्राह्याश्चमे ऐन्द्राग्नश्चमे वैश्वदेवश्चमे मरु-[1]त्वतीयश्चमे मा[2]हेन्द्रश्चमे आदित्यश्चमे सावित्रश्चमे सार-स्वतश्चमे पौष्णश्चमे पा[3]त्नीवतश्चमे हा[4]रियोजनश्चमे * स्रु[5]चश्चमे चमसा[6]श्मे ॥ ७ ॥ यज्ञेन कल्पताम्

नमः सोमाय च रुद्राय च । नमः ताम्राय चारु-णाय च । नमः शङ्गवे च पशुपतये च । नम उग्राय च भीमाय च । नमो हन्त्रे च हनीयसे च । नमोऽग्रे-वधाय च दूरेवधाय च । नमो वृक्षेभ्यो हरिकेशे-भ्यः ॥ नमस्ताराय । नमः शम्भवे च । मयोभवे च । नमः शङ्कराय च । मयस्कराय च । नमः शिवाय च शिवतराय च । नमः किंशि[7]लाय च क्षयणाय च ।

वायव्यानिचमे द्रोणकलशश्चमे पू[8]तभृच्चमेऽपू[9]तभृच्चमे[10] ग्रावाणश्चमेऽधिषवणेचमेऽवभृथश्चमे स्वगाकारश्चमे ८ ॥ यज्ञेन कल्पताम्

नम इरिण्याय च प्रपथ्याय च । नमः पुलस्ति-

---

१ मारुत्वतीयाः २ महेन्द्रीयश्चमे ३ पत्नी ४ हरि ५ स्रुश्चमे ६ स ७ स ८ त्या ९ भू १० ऽभू

ने च कपर्दिने च । नमो गोष्ठ्याय च गृह्याय च । नमः तल्प्याय च गेह्याय च । नमः पार्याय चावार्याय च । नमः प्रतरणाय चोत्तरणाय च । नमस्तीर्थ्याय च कुल्याय[1] च । नमः फेन्याय च शष्प्याय च । नमः सिकत्याय च प्रवाह्याय च । नमो ह्रदव्याय च निवेष्प्याय च । नमः काट्याय च गह्वरे[2]ष्ठ्याय च । नमः शुष्क्याय च हरित्याय च । नमो लोप्याय चोलप्याय च । नमः पाँसव्याय च रजस्याय च । नमः सूर्म्याय [3]चोर्म्याय च । नमः पर्णाय च पर्णशादाय च । नम आखिदते च प्रखिदते च । नमोऽभिघ्नते चापगुरमाणाय च । नम आखिदाय च विखिदाय च । नमो वः किरिकेभ्यो देवानाँ हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षिण[4]केभ्यो नम आनिर्हतेभ्यः ।

अग्निश्चमे घर्मश्चमेऽर्कश्चमे सूर्यश्चमे प्राणश्च-

---

१ कू २ ष्ठा ३ च ऊर्व्याय ४ विणत्के

मेऽश्वमेधश्चमे पृथिवीचमे दितिश्चमेऽदितिश्चमे द्यौ·
श्चमे शक्करीरङ्गुलयो दिशश्चमे यज्ञेन कल्पतां व्रतश्च-
र्तुश्च संवत्सरश्च दीक्षाच तपश्चाहोरात्रे ऊर्वष्ठीवे बृहद्र·
थन्तरेचमे ॥ ६ ॥ यज्ञेन कल्पताम्

द्रापे अन्धसस्पते दरिद्र नीललोहित । आसा
प्रजानामेषां पुरुषाणामेषां पशूनाम् । मा भेर्मा
रो[1]ऽमो नः किञ्चनाममत् ॥ इमा रुद्राय तवसे कप-
र्दिने क्षयद्वीराय प्र भरामहे मतीः । यथाः नः शम·
सद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातु-
रम् ॥ या ते रुद्र शिवा तनूः शिवा विश्वाहा भेषजी ।
शिवा रुतस्य भेषजी तया नो मृळ जीवसे ॥ परि
णो[2] रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मतेरघायोः[3] ।
अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनया-
य मृळ ॥ मीढुष्टम शिवतम शिवो नः सुमना भव ।
परमे वृक्ष आयुधं निधाय कृत्तिं वसान उच्चर

---

१ रु २ णो ३ तिर

पिनाकं बिभ्रदुत्चर ॥ विकिरिद्र विलोहित नमस्ते अस्तु भगवः । यास्ते सहस्रँ हेतयोऽन्यमस्मन्नि वपन्तु ताः ॥

त्र्यविश्चमे त्र्यवीचमे दित्यवाट्चमे दित्यौहीचमे पञ्चाविश्चमे पञ्चावीचमे त्रिवत्सश्चमे त्रिवत्साचमे तुर्यवाट्चमे तुर्यौहीचमे ⊛ पष्ठवाट्चमे पष्ठौहीचमे उक्षाचमे वशाचमेऽनुड्वाँश्चमे धेनुश्च[illegible] [2]ऋषभश्चमे वेहश्चमे ॥ १० ॥ यज्ञेन०

सहस्रधा सहस्राणि हेतयस्तव बाह्वोः । तासामीशानो भगवः पराचीना मुखा कुरु ॥

असङ्ख्याताः सहस्राणि ये रुद्रा अधि भूम्याम् । तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥ येऽस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि । तेषां स० ॥ ये नीलग्रीवाः शतिकण्ठा दिवँ रुद्रा उपाश्रिताः । तेषां स० ॥ ये नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः । तेषां स० ॥ ये वनेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः । तेषां स० ॥ येऽन्नेषु विविध्यन्ति

१ उक्ष २ वृष

पात्रेषु पिबतो जनान् । तेषां स० ॥ ये भूतानामधि-
पतयो विशिखासः कपर्दिनः । तेषां स० ॥ ये पथीनां
पथिरक्षय ऐळंमृदा[1] यव्युधः[2] । तेषां स० ॥ ये तीर्था-
नि प्रचरन्ति सृकावन्तो निषङ्गिणः । तेषां स० ॥ य
एतावन्तो वा भूयाँसो वा दिशो रुद्रा वितष्ठिरे[3] । तेषां
स० ॥ नमो अस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवः
तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदी-
चीर्दशोर्ध्वाः । तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो
मृळयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे
दधामि ॥ नमो अस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वात
इषवः तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीची-
र्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमो अस्तु ते नोऽवन्तु
ते नो मृळयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां
जम्भे दधामि ॥ नमो अस्तु रुद्रेभ्यो ये पृथिव्यां येषा-
मन्नमिषवः तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रती-

---

१ ऐलबृदा (ऐलभृतः) २ युयुधः ३ तस्थि

ीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमो अस्तु ते नोऽव-
तु ते नो मृळयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमे-
ां जम्भे दधामि ॥

एकाचमे तिस्रश्चमे तिस्रश्चमे त्रयस्त्रिंशच्चमे चतस्र-
चमेऽष्टौचमेऽष्टौचमेऽष्टाचत्वारिंशच्चमे ॥

वाजश्च प्रसवश्चापिजश्च क्रतुश्च वाक्पतिश्च वसुश्च
वमौर्ध्नो मूर्धा वै यशनो व्यश्वाँ आन्त्योन्त्यो भौवनो भुव-
स्य पतिः प्रजापतिरधिपतिरियन्ते राण्मित्रो यन्तासि
मन ऊर्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाधिपत्यायायुर्यज्ञेन
ल्पतां, मनो यज्ञेन कल्प०, प्राणो यज्ञेन कल्प०, चक्षुर्यज्ञे-
क०, श्रोत्रं यज्ञेन क०, वाग्यज्ञेन क०, आत्मा यज्ञेन क०,
ह्मा यज्ञेन क०, पृष्ठं यज्ञेन क०, यज्ञो यज्ञेन कल्पतां, ऋक्च
ाम च स्तोमश्च यजुश्च बृहच्च रथन्तरञ्च स्वर्देवा अग-
न प्रजापतेः प्रजा अभूवन्नमृता अभूम वेट्स्वाहा ॥ ११ ॥

वाजस्य नु प्रसव इति षट् ॥

विश्वे अद्य मरुतो विश्व ऊती वि[1]श्वे भवन्त्वग्नयः समि-
ाः । विश्वे नो[2] देवा अवसागमन्तु[3] विश्वमस्तु द्रविणं

---

१ र्वि २ श्रिह ३ मा

वाजो[1] अस्मे ॥ आ मा वाजस्य प्रसवो जगम्यादा मा द्यावापृथिवी विश्वरूपे । आ मा गन्तां पितरा मातरा चा मा सोमो अमृतत्वेन गम्यात् ॥ वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे । यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्म्म साविषत् ॥ वाजो नो[2] विश्वैर्देवैर्नैः सप्त प्रदिशश्चतस्रो वा परावतः । वाजो नो विश्वैर्देवैर्धनसाताविहावतु ॥ वाजो मे अद्य प्रसुवाति दानं वाजो देवान्हविषा वर्धयाति । वाजस्य हि प्रसवेनन्नमेति विश्वा आशा वाजपतिर्जयेयम् ॥ वाजः पुरस्तादुत मध्यतो नो वाजो देवानृतुभिः कल्पयाति । वाजस्य हि प्रसवेनन्नमेति सर्वा आशा वाजपतिर्भवेयम् ॥ सं मा सृजामि पयसा पृथि[3]व्याः सं मा सृजाम्यद्भिरोषधीभिः । सोऽहं वाजँ सनो[5]म्यग्ने ॥ पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः[6] पयस्वतीः प्रदिशः सन्तु मह्यम् ॥

तेजोऽसि यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु । यो रुद्रो विश्वा भुवना विवेश तस्मै

---

१ वाजो अस्मिन् २ मा ३ घृतेन ४ अरः ५ सेनयमग्ने, स्यग्नेः ६ धाम्

रुद्राय नमो अस्तु देवाः ॥ तर्पणम् मद्यं पीत्वा गुरुदा-
रांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां विधाय । भस्म-
च्छन्नो भस्मशय्यां शयानो रुद्राध्यायी मुच्यते सर्व-
पापैः ॥ नित्यं दण्डी नित्ययज्ञोपवीती नित्यं ध्याता
भस्मना कर्मबन्धी । रुद्रं दृष्ट्वा देवमीशानमुग्रं याति
स्थानं तेन साकं तदीयम् ॥

अनेन चमकानुवाकसहितरुद्रमन्त्रपाठेन (होमेन) आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं । श्रीमहारुद्रदेवतासन्तोषणार्थं । भगवान् अघोरः तत्पुरुषः सद्योजातः वामदेवः असुरबलहा ईशानः बहुरूपः विश्वरूपः त्र्यम्बकः त्रिनेत्रः त्रिशूलहस्तः महामृत्युञ्जयभट्टारकः शतरुद्रेश्वरः वृषभवाहनः सानुचरः सपरिवारः भवो देवः द पार्वतीसहितः परमेश्वरः प्रीयतां प्रीतोऽस्तु ॥

॥ इति रुद्रमन्त्रसहितचमकानुवाकाः समाप्ताः ॥

## ॥ नमः शिवाय ॥

संवर्ताग्नितडित्प्रतप्तकनकप्रस्पर्धितेजोरुणं गम्भीरस्मितनिःसृतांशुदशनप्रोद्भासिताम्राधरम् । भालेन्दूज्ज्वललोलपिङ्गलजटाभारप्रबद्धोरगं वन्दे सिद्धसुरासुरेन्द्रनमितं पूर्वं मुखं शूलिनः ॥ १ ॥ कालाभ्रभ्रमराञ्जनद्युतिनिभं व्यावृत्तपिङ्गेक्षणं बालेन्दुद्युतिनिःसृतांशुदशनप्रोद्भिन्नदंष्ट्रांकुरम् । सर्पप्रोतकपालशक्तिकलशव्याकीर्णसच्छेखरं वन्दे दक्षिणमीश्वरस्य कुटिलभ्रूभङ्गरौद्रं मुखम् ॥ २ ॥ प्रालेयामलमिन्दुकुन्दधवलं गोक्षीरफेनप्रभं भस्माभ्यङ्गमनङ्गदेहदहनं ज्वालावलीलोचनम् । ब्रह्मेन्द्रादिमरुद्गणैः स्तुतिपरैरभ्यर्चितं योगिभिर्वन्देऽहं सकलं कलङ्करहितं स्थाणोर्मुखं पश्चिमम् ॥ ३ ॥ रक्तं-कुंकमपिङ्गलं सतिलकं व्यापाण्डुगण्डस्थलं भ्रूविक्षेपकटाक्षवीक्षणलसत्संसक्तकर्णोत्पलम् । स्निग्धं विम्बफलाधरं प्रहसितं लीलालकालङ्कृतं वन्दे पूर्णशशाङ्कमण्डलनिभं वक्त्रं हरस्योत्तरम् ॥ ४ ॥ व्यक्ताव्यक्तगुणोत्तरं च वरदं षट्त्रिंशतत्त्वात्मकं तस्मादुत्तरतत्त्वमक्षयमिति ध्यातं सदा योगिभिः । वन्दे तामसवर्जितेन मनसा सूक्ष्मातिसूक्ष्मं परं शान्तं पञ्चममीश्वरस्य वदनं खंव्यापितेजोमयम् ॥ ५ ॥ यद्दैत्यासुरकन्यकाकरशतैः संवीज्यते चामरैः पुंनागाम्बुजनागजातिबकुलैराशीविषैश्चार्चितम् । ज्वालामालसहस्रदीप्तिकिरणं कालाग्निरुद्रं महत्तत्संहारकरं नमामि मनसा पातालसंस्थं मुखम् ॥ ६ ॥

एतानि सर्ववदनानि महेश्वरस्य ये कीर्तयन्ति मनुजा सततं प्रभाते ।
ते पर्यटन्ति गगने सुमहत्प्रकाशा गच्छन्ति ते शिवपदं रुचिरैर्विमानैः ॥

इति श्रीहनुमत्कृतं सागरलङ्घनं स्वच्छन्दभैरवस्तोत्रं सम्पूर्णम् ॥